# * समर्पणम् *

—:o:—

अव्यक्ते सर्वभावानां,

यतो भावः स्वभावतः ।

तस्मादध्येतृमात्राय

ससम्मानं

समर्प्यते ॥ कि॰मि॰लि॰ लेखः।

अध्येताऽत्रात्मनो रूपं,

पश्येत् काव्यामृतं पिबन् ।

समर्पकः—

सत्यदेवो वासिष्ठः

प्रणेता—

स्वोपज्ञस्य सत्याग्रहनीतिकाव्यस्य

## —: स्वोपज्ञ-सत्याग्रह-नीतिकाव्यस्य विषयानुक्रमणिका :—



### प्रथमाध्यायस्य 'दुर्जनगर्हात्मकः' प्रथमः पादः



### प्रथमाध्यायस्य 'सुजनप्रशंसात्मकः' द्वितीयः पादः

### प्रथमाध्यायस्य 'क्षुत्क्षामीयात्मकः' तृतीयः पादः



### प्रथमाध्यायस्य 'अहिंसाव्रतमाहात्म्यीयः' चतुर्थः पादः



### द्वितीयाध्यायस्य 'राष्ट्र-पतनोत्थानीयः' प्रथमः पादः



### द्वितीयाध्यायस्य 'त्रिविध-राजभेदीयः' द्वितीयः पादः

## द्वितीयाध्यायस्य 'स्वराज्य-महिम-वर्णनीयः' तृतीयः पादः



## द्वितीयाध्यायस्य 'सदैवमृद्वीयः' चतुर्थः पादः



## तृतीयाध्यायस्य 'वारिपटुतीयः' प्रथमः पादः



## तृतीयाध्यायस्य 'आदर्श-कर्म-वर्णनीयः' द्वितीयः पादः



## तृतीयाध्यायस्य 'उद्बोधनीयात्मकः' तृतीयः पादः

## तृतीयाध्यायस्य 'षड्तुवर्णनीयः' चतुर्थः पादः

## चतुर्थाध्यायस्य 'नानावर्षगणीयः' प्रथमः पादः



## चतुर्थाध्यायस्य 'सन्मित्रमाश्रयीयः' द्वितीयः पादः



## चतुर्थाध्यायस्य 'आप्तविद्यीयः' तृतीयः पादः



## चतुर्थाध्यायस्य 'धर्माभिधः' चतुर्थः पादः



## पञ्चमाध्यायस्य 'सत्यविभूतिनामा' प्रथमः पादः



## पञ्चमाध्यायस्य 'परमायुषीयः' द्वितीयः पादः

## पञ्चमाध्यायस्य 'ऋतुचर्याभिधः' तृतीयः पादः



## पञ्चमाध्यायस्य 'स्वातन्त्र्यीयः' चतुर्थः पादः

स्वोपज्ञानन्तवृत्ति-विराजितम्

# सत्याग्रह-नीति-काव्यम्

## राष्ट्रभाषानूदितञ्च

साहित्य-संगीत-कलाविहीनः,
साक्षात्पशुः पुच्छ-विषाणहीनः ।
तृणन्न खादन्नपि जीवमानः,
तद् भागधेयं परमं पशूनाम् ॥

—: ओ३म् :—

[ अथ स्वोपज्ञयाऽनन्ताभिधवृत्त्या विराजितम् ]

# सत्याग्रह-नीतिकाव्यम्

## मङ्गलाचरणम्

तत्र निर्विघ्नतया समाप्तिमीहमानः कविस्त्रयोदशभिः पद्यैर्मङ्गलमाचरति—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त' इति महाभाष्यवचनात् ।

काल-दिग्भिरमेयाय, सत्यधृन्मात्रमूर्त्तये ।
सत्तपस्त्यागयुक्ताय, नमः सत्याग्रहाय[1] ते ।।१।।

१. सत्यमेव आ=समन्ताद् ग्रहः शरीरं यस्य तस्मै भगवते, सत्याग्रहरूपयुद्धाय चेति श्लेषालङ्कारः ।

अहिंसा सत्यमस्तेयो, ब्रह्मचर्योऽपरिग्रहः ।
यं श्रितस्तमहं वन्दे, सदा सत्याग्रहं शुभम् ।।२।।

---

### —सत्याग्रह-नीतिकाव्य का राष्ट्रभाषानुवाद—

सत्यं सत्ये समासीनाः, संसृतौ सत्पदं श्रिताः ।
सर्वेश्वर-स्वरूपं तं, सत्यमेव समाश्रये ।।

प्रस्तुत काव्य की निर्विघ्न समाप्ति के लिये तेरह पद्यों से कवि 'मङ्गलाचरण' करता है—

जो काल और दिशा के माप-दण्ड से नापा नहीं जा सकता, जो सत्यरूपी शरीर को धारण करता है, और जो उत्कृष्ट तप एवं त्याग से युक्त है, उस सत्याग्रह [सत्यरूप आग्रह=सर्वतोभावेन शरीर धारण करने वाले भगवान्] के लिये नमस्कार हो ।।१।।

इस पद्य में श्लेषालङ्कार है ।

**अहिंसा**—सर्व प्राणियों की हिंसा=प्राणवियोग न करना; **सत्य**—मन वचन और काया से जो देखा-सुना गया हो उसे यथार्थ कहना; **अस्तेय**—

जञ्जमीति[१] च मां मृत्युर्जरीर्हर्ति च काञ्चनम् ।
दरीदर्शिम च सत्य ! त्वां, दिक्षु सर्वासु रक्षकम् ॥३॥

१. 'जमु-अदने' भ्वादिको धातुस्तस्य यङ्लुकि प्रयोगः ।

किं करोमि क्व गच्छामि, कं भोः ! शरणमाश्रये ।
सत्यदृष्टचा विना सर्वं, जगन्निष्प्रभमस्ति मे ॥४॥

त्वं पापनाशकं सत्य ! भववारिधि-तारकम् ।
पाहि मां भव-भीष्माब्धेस्तवैवाग्रहमागतम् ॥५॥

तपस्विनो दानपरा मनीषिणो, यशस्विनो वेदविदो महर्षयः ।
न मुक्तिमायान्ति विना सदाग्रहं[१], सदाग्रहायैव नमोऽस्तु मे सदा ॥६॥

१. सत् सत्यं, प्रशस्तमभ्यर्चितम् । तथाह चामरे—'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्चिते च सद्' इति (का० ३ नानार्थवर्गे) । तस्य आग्रहस्तं सदाग्रहं=सत्याग्रहमिति यावत् । तथैव सदाग्रहायेति च ।

---

परद्रव्य आदि की चोरी न करना; ब्रह्मचर्य—इन्द्रियों का संयम रखना; तथा अपरिग्रह—भोग-साधनादि सामग्री का संग्रह नहीं करना [ये पांच यम] जिस का सुचारु रूप से अवलम्बन लिये हुये हैं । उस शुभ सत्याग्रह को मैं वन्दन करता हूं ॥२॥

हे सत्य ! मुझे मृत्यु बार-बार अपना भोज्य बना रहा है, और मेरे पास जो भी काञ्चन=सुवर्ण अथवा आत्मज्ञान-सम्बन्धी पूंजी है, उस का अपहरण कर रहा है । किन्तु फिर भी सर्व दिशाओं में एकमात्र तुझे ही मैं अपना रक्षक देख पा रहा हूं ॥३॥

क्या करूं ? कहां जाऊं ? और किस की शरण का सहारा लूं ? मुझे तो सत्य-दृष्टि के बिना सारा जगत् हतप्रभ प्रतीत हो रहा है ॥४॥

हे सत्य ! तू पाप-नाशक है, और तू ही भव-सागर से पार करने वाला है । संसाररूपी इस घोर समुद्र में गिरा हुआ मैं तेरे ही आग्रह=शरण में आया हूं, तू मेरी रक्षा कर ॥५॥

( विविध शास्त्र-रीति से ) तपस्या करने वाले, दान देनेवाले, बुद्धिमान्, यशस्वी, वेद को जानने वाले और महामुनिगण भी सत्य के आग्रह से रहित होकर मुक्ति को प्राप्त नहीं होते हैं। इसीलिये हे सत्याग्रह ! तुम को हीं मेरा सदा नमस्कार हो ॥६॥

किरात-हूणान्ध्र-पुलिन्द-पुक्कसा, आभीर-कङ्का यवनाः खसादयः ।
अन्ये च पापा ऋतधारणाश्रयाद्विशुद्धिमाप्ता ऋतपाय ते नमः[१] ॥७

१. अत्र 'कुवलयानन्द'कारदृष्टया किरातादीनां सत्यधारणाद्विशुद्धि-प्राप्ति गाथास्मरणाद् 'ऐतिह्यालङ्कारः' ।

चिन्त्यां सदा सुचरिताचरणैरुपेतां,
दृप्तस्य दर्प-दलनीं दुरितैरगम्याम् ।
नित्यात्म-सयमतया परिपातुमर्हीं,
सत्याग्रहिन्! तव नमामि सदात्मशक्तिम् ।।८॥

त्यक्त्वा सुदुस्त्यज-जनेप्सित-कीर्त्ति-तृष्णां,
सन्निष्ठ ! सत्यवचसा शुचि सत्यनाम ।
सत्याग्रहाय हृदये लषितं यतस्तत्,
सत्याग्रहिन्नभिनमामि तवात्मशक्तिम् ।।९॥

तेजःपते ! दुरित-तापज-भीतिहारिन् !
वाञ्छा न मे हृदि वदामि रजस्तमोजा ।

---

किरात, हूण, आन्ध्र, पुलिन्द, पुक्कस, आभीर=अहीर, कङ्क, यवन और खस आदि विविध धर्म और जाति के ये व्यक्ति, एवं अन्य जातियों के पामर प्राणी सत्य-धारण के सहारे से ही पूर्ण शुद्धि को प्राप्त हो गये हैं। अतः सत्य-धारण करने वालों के रक्षक तुझ सत्याग्रह के लिये मेरा नमस्कार हो ।।७॥

निरन्तर चिन्तनीय, सच्चरित के आचरणों से युक्त, अभिमानियों के गर्व का खण्डन करने वाली, निष्कलङ्क, नित्य आत्म-संयम के कारण (सब का) पालन करने में समर्थ, ऐसी तेरी आत्म-शक्ति को हे सत्याग्रही ! मैं सदा नमन करता हूं ।।८॥

बड़ी कठिनाई से छूटने वाली, एवं प्रत्येक प्राणी के द्वारा ईप्सित कीर्ति की तृष्णा को छोड़कर सत्य-पालन करने वाले हे सत्याग्रही ! सत्य-वचन से पवित्र और सच्चा नाम है जिस का ऐसे सत्याग्रह के लिये जिसने अपने मन में वह अभिलाषा की, ऐसे तेरी आत्म-शक्ति को मैं नमन करता हूं ।।९॥

हे तेजो-निधान ! हे पापरूपी ताप से उत्पन्न भय का वारण करने वाले ! मैं कहता हूं कि—मेरे मन में रजस् अथवा तमस् से प्रादुर्भूत कोई

सत्याग्रहे प्ररमतां चपलं मनो मे,
सत्याग्रहाद् हृदयमस्तु यतो विपापम् ॥१०॥

सत्य ! त्वमेषि तपसां सुहृदां मनांसि,
दर्पं व्यपेतुमनसश्च भजन्ति ये त्वाम् ।
भूयोऽनृते व्यवहरन्नपि दोषयुक्त—
स्त्वामाह्वये हृदयमेहि मनः पुनीहि ॥११॥

जानन्तु देव[1] ! तव दिव्य-यशोविभूतिं,
विज्ञा ! विशेषतपसा हृतकिल्विषा ये ।
अज्ञान-दोष-वितते हृदये मदीये,
रूपं प्रकाशय निजं तमसः परस्तात् ॥१२॥

१. गुणातिशयस्याधारकत्वादत्र 'देव'शब्दस्य प्रयोगः । सत्यस्य गुणातिशयो व्यक्त एव ।

सत्याग्रहात्मकसरस्त्वतिगाढनीर—
मीर्ष्यादि[1]-जन्यमकरादिक-विघ्न-पूर्णम् ।
जीर्णं वपुः शिथिलमानसता तथाऽपि,
पारं तवाश्रयबलादयि ! यान्ति धन्याः[2] ॥१३॥

---

इच्छा नहीं है । (यदि है तो यही कि) मेरा चञ्चल मन सत्याग्रह में रमण करे, और उस सत्य के ग्रहण से मेरा हृदय निष्पाप बन जाय ॥१०॥

हे सत्य ! तुम तपस्वी, अच्छे हृदय वाले, और अपने असत्य से उद्भूत अभिमान को दूर हटाने की इच्छा वाले, तथा जो तुम्हारी आराधना करते हैं—उनके मन में निवास करते हो । फिर भी मैं (यदा कदा) असत्य व्यवहार के कारण दोष-युक्त बना हुआ तुम्हारा आह्वान करता हूं । तुम मेरे हृदय में आओ, और मेरे मन को पवित्र करो ॥११॥

हे सत्यरूपी देव ! विशिष्ट तप के द्वारा जिन्होंने अपने पापों का नाश कर दिया है, वे विज्ञ तुम्हारे दिव्य यश की शक्ति को पहिचानें । एतदर्थ तुम मेरे अज्ञानरूपी दोष से युक्त हृदय में अन्धकार से परे रहने वाले अपने रूप-तेज का प्रकाश करो ॥१२॥

सत्याग्रहरूपी सरोवर अत्यन्त गहरे जलवाला है, और उसे पार करने में ईर्ष्या (मानसिक द्वेष, परद्रोह, परनिन्दा, परिताप एवं स्वार्थ) आदि मानसिक दोषरूपी मकरादि जल-जन्तुओं का विघ्न पूर्णरूपेण विद्यमान है ।

१. आदिशब्दाद् 'अभिध्या-परद्रोह-परनिन्दा-परिताप-स्वार्थादयो मनसो दोषा ग्राह्या' । २. अत्रोपमालङ्कार ।

## हेतु-निरूपणम्

तत्रास्य सत्याग्रह-नीतिकाव्यस्य निबन्धने हेतुमाचष्टे, 'हेतुमद् ब्रूयाद्' इत्याप्तवचः प्रामाण्यात्—

सत्यस्य गीतिर्निगमेषु[1] गीता,
सत्यस्वरूपेण विभु[2]र्विशिष्टः ।
सत्यस्य कीर्तिः कविभि[3]र्निबद्धा,
गायामि सत्यं स्वतमो ऽपहर्त्तुम् ॥१॥

१. वेदेषु । २. प्रभुः स्वयम्भूरीश्वरः । ३. वेदानुकूलार्षाम्नायकर्तृभिः क्रान्तदर्शिभिः । ४. स्वकीयमज्ञानान्धकारम् । पद्येऽस्मिन् प्रकृतार्थानां प्रसिद्धक्रमानुसारिन्यसनाद् रत्नावलिरलङ्कारः ।

---

इधर (कारावास के कारण) शरीर भी क्षीण हो जाता है, तथा मन में भी उत्साह नही रहता । फिर भी हे सत्य ! केवल तुम्हारे आश्रयरूपी बल से (जो सत्याग्रही) उस के पार पहुंच जाते हैं, वे (सत्यमेव) धन्य हैं ॥१३॥

## हेतु-निरूपणम्

प्रस्तुत 'सत्याग्रह-नीतिकाव्य' के निर्माण का हेतु बतलाते हुये कवि सत्य की वास्तविकता की ओर लक्ष्य करके कहता है—

सत्य (जिस के निमित्त प्रस्तुत काव्य का प्रणयन हुआ है, उस) की महिमा वेदों में गाई गई है। ईश्वर भी सत्य-स्वरूप होने के कारण विशिष्ट माना जाता है । वेद के अनुकूल ऋषिभाषित आम्नायों के प्रणेता क्रान्तदर्शी कवियों ने सत्य की कीर्ति का (अपने काव्यों में) सङ्कलन किया है । इसलिये मैं (काव्यकर्त्ता) अपने (अज्ञानरूपी) अन्धकार को दूर करने के लिये सत्य का गुण-वर्णन करता हूं ॥१॥

सत्येन लोके पिशुना विमृष्टाः,
सत्येन भूमौ यश आप्तमग्र्यम् ।
सत्यं दुराप कुरुते सुखाप्यं,
गायामि सत्यं सुरवर्गगेयम् ॥२॥

सत्यं प्रकाशोऽनृतमेव मोहः[1],
सत्यानृताभ्यां पुरुषोऽत्र लोके ।
सत्यं वचः सत्यमयं च कर्म,
देवस्य तस्मात् कवयामि सत्यम् ॥३॥

१. 'मोहात्मकं तम' इति प्रामाण्यात् ।

सत्यस्य गीतिः सकलेश[1]-गीति—
स्तयाऽत्र सर्वो वशमेति लोके ।
धाता स्तुतो मे वशमेतु नूनं,
तस्मात् प्रयत्नात् कवयामि सत्यम् ॥४॥

१. कलया सहितं सकलं, सकलस्य जगत ईशः=सकलेशः,तस्य गीतिर्गानम् ।

---

संसार में (इसी) सत्य से दुर्जन विनाश को प्राप्त हो गये । सत्य के माध्यम से ही पृथिवी पर (सज्जनों ने) सर्व-मूर्धन्य यश को प्राप्त किया । सत्य अप्राप्य वस्तु को सरलता से प्राप्त होने योग्य बना देता है । अतएव देवताओं द्वारा गाये जाने वाले इस सत्य का मैं गुणगान करता हूं ॥२॥

सत्य प्रकाश-स्वरूप है, और झूठ मोहरूपी अन्धकार का द्योतक है । सत्य और झूठ (इन दोनों का संयोग होने से ही) इस लोक में (प्राणी) पुरुष कहलाता है । (क्योंकि) उस परमात्मा के तो वचन भी सत्य हैं, और कर्म भी सत्यमय हैं (इसलिये वह देव कहलाता है), अतः मैं सत्य से सम्बन्ध जोड़ने वाले इस काव्य का निर्माण करता हूं ॥३॥

जो सत्य की महिमा का वर्णन है, वही जगदीश्वर की स्तुति है । उस गीति-स्तुति से संसार में सभी वशीभूत=प्रसन्न होते हैं । यही कारण है कि मैं भी सत्य की स्तुति करने में प्रयत्नशील बना हूं । इस स्तुति (रूपः काव्य) से वह परब्रह्म विधाता मेरे वश में हो, अर्थात् मुझ पर प्रसन्न होवे (यही एकमात्र कामना है) ॥४॥

श्रुतिं विभुः काव्यमयीं[1] चकार,
श्रुतिः श्रुतौ प्रीतिमुपैति काव्यात्[2] ।
मयाऽल्पसत्त्वेन कृतं हि काव्यं,
सत्याश्रयात् प्रीतिपदं प्रयातु ।।५।।

१. 'पश्य देवस्य काव्यं न ममार न जीर्यति' इति श्रुतिः। तथा च—'न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन्' इति च श्रुतिः। अत्र श्रुतिरभिमतार्थे प्रमाणत्वेनोपन्यस्ता। तस्मात् 'स्मृत्यलङ्कारः'। २. कवित्वभावात् श्रुतिः श्रवणयोः प्रियतरा भवतीति भावः।

ऋतं न लोके व्ययते[1] कदाचित्,
कालोऽव्ययः सन् व्ययतेऽथ लोकान् ।
कालाश्वमारुह्य यदत्र गीतं,
कालेन भुक्तं[2] प्रणमामि कालम् ।।६।।

१. अन्तर्भूतण्यर्थोऽय धातुः। २. कालेन समयेन भुक्तं कवलीकृतमर्थात् वास्तविकं वृत्तमाश्रित्य लिखितम्।

जन्मान्तरीयं दुरितं चितं यत्,
तन्मार्जनायैव मया प्रयस्तम् ।
सत्येन गीतेन लयं तदेयाद्,
गायाम्यत. सत्यवचः प्रकामम् ।।७।।

---

ईश्वर ने वेदों को काव्यमय बनाया है, तथा काव्यादि के श्रवण से कर्णेन्द्रिय को प्रसन्नता होती है। मैं तो अल्प-प्राण=अकिञ्चन हूं—मेरे द्वारा प्रणीत यह काव्य यथार्थतः सत्य के सहारे ससार का प्रीतिपात्र बने ।।५।।

जगत् में सत्य कभी क्षीण नहीं होता, किन्तु काल अक्षय बनकर प्राणियों को मिटाता रहता है। मैं उस काल को प्रणाम करता हूं—जिस के अश्व पर चढ़कर ही अपने जीवन-काल में उपभोग=अनुभव की गई घटनाओं का वर्णन यहां किया गया है ।।६।।

मेरा यह (काव्य-रचना का) प्रयास जन्मान्तर के सञ्चित पापों के विनाश के लिये ही है। और निरन्तर मैं (अपनी वाणी द्वारा) सत्य का गान भी इसीलिए करता हूं—कि इस सत्यगीत के माहात्म्य से मेरे वे पाप विलीन हो जांय ।।७।।

'काव्यं कवीनां सरसं हि कर्म.'
किं वच्मि[१] ? तत् तैः कुपथे प्रणुन्नम् ।
व्यामोह्य तल्लाञ्छनमत्र काव्ये,
काव्यं करोम्याप्तजनानुशिष्टम् ॥८॥

१. किं कुत्सितं वच्मीत्यप्यत्राकूतम् ।

प्राज्ञा ! मदुक्तं यदि रोचते वः,
काव्यं कुरुध्वं दुरितापहारि ।
नीचैः प्रपित्सुः स्वत एव मर्त्यो
यूयं च नीचैर्नु कुतः प्रयाथ ? ॥९॥

उच्चैः कवेः कर्म किमस्ति ? काव्य—
मूर्ध्वो विवस्वानथ सत्यमुच्चैः ।
उच्चैः पदे ब्रह्मणि मे सुषुप्सा,
तां सत्यकाव्यं विदधातु सत्याम् ॥१०॥

'काव्य कवियों का सरस (रसादि-युक्त एवं उत्तम) कर्म है'। यदि उन का यह कर्म बुरे मार्ग पर प्रवृत्त हो जाए, तो उस के सम्बन्ध में मैं क्या कह सकता हूं ? (केवल किं=कुत्सित ही कह सकता हूं) । अतः इस काव्य में मैं उस (व्यर्थ के शृङ्गार-हास्यादि दोष-जनित) कलङ्क को दूर रखकर पूर्वाचार्यों के आदेशानुकूल (सत्य का) वर्णन करता हूं ॥८॥

हे विद्वज्जनो ! यदि आपको मेरी उपर्युक्त बात अच्छी लगती हो, तो जो काव्य (अपने, पराए, समस्त जाति, समाज और देश के) पाप एवं कुत्सित विचारों को दूर करे, ऐसे काव्य का निर्माण करो । क्यों कि मनुष्य तो वैसे ही अधःपतनशील है, फिर उसके साथ तुम क्यों नीचे जा रहे हो ? ॥९

कवि का सब से ऊंचा कर्म क्या है ? काव्य । सूर्यनारायण भी सर्वोच्च स्थान (सूर्यलोक) में निवास करते हैं, तथा सर्वोत्तम वस्तु=पद भी सत्य (लोक) ही है । अतः उसी सत्य ब्रह्म के उच्च पद में मेरी लीन होने की अभिरुचि है । उस को यह 'सत्याग्रह-नीतिकाव्य' सत्य बनावे=सफल करे ॥१०॥

उपसंहरति—

सत्यदेव[1]-पदं प्राप्तुं, सत्यां नीतिं समाश्रये।
स्वानुभूत्यागमेनात्र[2], गीतं सत्यं प्रसीदतु[3] ॥११॥

१. कवेर्नामापि 'सत्यदेव' इति प्रसिद्धम। २. आगमस्तावद् वेदः, तदनुकूलमाप्तवाक्यञ्च। ३. अत्र सूच्यार्थसूचनेन 'मुद्रालङ्कारः श्लेषश्च'।

## सत्याग्रहस्यादिस्रोतः

सत्याग्रहस्यादिमं स्रोतः प्रकृतिरेव, सा च सनातनात् कालात् सत्याग्रहमुपदिशन्ती प्रत्यक्षतश्च परिणमन्त्यास्ते, इति ज्ञापनाय पद्येन विस्पष्टयति—

लोकान् सर्वविधान् विचार्य पुरतः को[1] व्याकरोत् पूर्ववत्,
मर्त्यं वाऽथ पशुं वियच्चरमथाब्जं स्वेदजं भूरुहम्।
नैवाऽद्याप्यजहात् स्वसत्यनिभृतां[2] सन्धां कविः[3] सद्ग्रही,
जातो नो क्षमते परं प्रसवितुं योनी[4] पृथक् चेत् पृथक् ॥१॥

१. कः=ब्रह्मा। २. सन्धां=प्रतिज्ञाम्। ३. कविः=स्वयम्भूरीश्वरः। ४. प्रथमाद्विवचनम्। चतुर्थचरणं व्याचष्टे—अथ

---

उपसंहार—

मैं सत्यदेव के पद की प्राप्ति के लिए सत्यनीति का आश्रय ग्रहण करता हूं। इस श्रुति-स्मृति-प्रतिपादित स्वानुभूति-जन्य रस से परिपुष्ट सत्य के महिमा-वर्णन से वह सत्यरूप पूर्णब्रह्म प्रसन्न होवे ॥११॥

इस में कवि ने 'सत्यदेव' पद से अपने नाम का भी निर्देश कर दिया है, अतः यहां श्लेष-पुष्ट 'मुद्रा' अलङ्कार है।

## सत्याग्रह का आदिस्रोत

ब्रह्मा ने लोक-लोकान्तरों को बनाने से पहले बहुत अच्छी प्रकार सोच विचार करके उन्हें बनाया था। आज तक भी उस में कोई परिवर्तन नहीं किया है। जैसे पहले मनुष्य को बनाया था, वैसे ही आज भी उत्पन्न हो रहा है। इसी प्रकार जिस पशु को जिस प्रकार के नियम से उत्पन्न प्रथमतः किया था, उसी प्रकार से आज भी

यदि पृथक् पृथक् योनी मिथुनीभावाय गच्छतश्चेत् तयोर्जातं यदपत्यं तत् परं अन्यं विकृतयोनिमिथुनीभावजं प्रसवितुं समर्थं न भवति। तद्यथा—गर्दभवडवयोश्च संयोगाज्जातमपत्यं पुनः तौ अश्वतरोऽश्वतरी च संतानसंतानाय न समर्थौ भवतः,कुतः मिथ्याग्रहवत्वात् तयोः। अतो ज्ञायते न भगवतो विश्वेश्वरस्य दुराग्रहे प्रीतिरस्तीति। अथ चेत् तौ पुनरपि मिथुनीभावं गच्छतस्तदा न योनितस्तस्य प्रसवो भवतीति नित्यं जगति दृश्यते,अपि तु मातुरुदरं विदार्य तस्य प्रादुर्भावः क्रियते। अतो ज्ञायते—फलत्येवैकदा कदाचिद् दुराग्रहोऽपि, परन्तु न चिराय कल्पत इति प्रकृतिर्द्रढयति॥

उत्पन्न कर रहा है। इसी प्रकार जलचर सृष्टि तथा स्वेदज लीख जूं पतङ्गादि, तथा च नानाविध वृक्ष, क्षुप, लताएं, घासादिक को उत्पन्न कर रहा है। इस से ब्रह्मा की सत्याग्रहवती प्रवृत्ति व्यक्त हो रही है, तथा च वह सब प्रकार से सत्याग्रह का ही मनुष्य को उपदेश दे रहा है। यदि कोई अहम्मन्य सत्याग्रह को छोड़कर दुराग्रह का अनुशीलन करता है, तो भगवान् शङ्कर उस का साथ नहीं देते। जैसे यदि दो भिन्न भिन्न योनियां परस्पर मैथुन करके संतान उत्पन्न करें, तो वह दो भिन्न-भिन्न योनिज पुनः परस्पर संयोग को प्राप्त करके संतान की परम्परा को चलाने में समर्थ नहीं होते। इतने पर भी यदि कोई हठ करे ही, तो उन दोनों की संतान को माता का पेट फाड कर निकालना पड़ता है। जिस का फल होता है संतान-क्रम का रुक जाना। हां, दुराग्रह एक बार तो अपना अच्छा या बुरा फल सङ्ग लाता ही है, परन्तु उस के पांव नहीं होते। अतः सत्याग्रह का आदि-स्रोत स्वयं यह प्रकृति ही है, जो दिन रात सत्याग्रह करने का उपदेश अपने व्यवहार से दे रही है॥१॥

# अथ प्रथमोऽध्यायः

## तत्र 'दुर्जनगर्हात्मकः' प्रथमः पादः

अथेदानीं भवति सत्याग्रहकाले कार्यसंलग्नतां प्रदर्शयति—

करिष्यामि निजं कार्यं, त्वं तु सत्याग्रहं भजेः ।
अन्योऽन्यं प्रेरयन्नेवं, जनः स्वेष्टं प्रधावति ॥१॥

प्रतिस्पर्धां च चित्रयति—

असौ सत्याग्रहं कुर्यात्, तदा कुर्यामहं मुदा ।
नो चेन्नाहं स्पर्धमानौ, च्युतौ कालहयादुभौ ॥२॥

अन्योऽन्यं प्रेरयतः स्पर्धमानान् वा जनान् समवलोक्य सत्याग्रहा-योच्चिक्रमिषुः कश्चन स्वात्मानमवबोधयति—

यतते कश्चिदेवात्र, वीरः सत्याग्रहाय वै ।
धिक्कृत्य मनुजानन्यान्, स्वार्थसक्तान् सतोद्रुहः ॥३॥

स्वान्त ! कान्तं स्वगन्तव्यं, मा जहीहि जनोक्तिभिः ।
सत्याग्रहं भजस्वालं, देशत्राणाय निश्चितम् ॥४॥

---

[प्रथम अध्याय का प्रथम पाद]

आरम्भ में सत्याग्रह के समय मनुष्यों की कार्य-तत्परता का दिग्दर्शन कराते हैं कि—

भाई ! मैं तो अपना काम करूंगा, तुम सत्याग्रह करो । इस प्रकार एक दूसरे को प्रेरित करके मनुष्य अपने इष्ट की ओर प्रवृत्त होता है ॥१॥

कोई कहता है कि—यदि यह सत्याग्रह करे, तो मैं भी प्रसन्न होकर सत्याग्रह करूं । और यह नहीं करता, तो मुझे क्या आवश्यकता है कि मैं सत्या-ग्रह करूं ? इस प्रकार परस्पर होड़ लगाते हुए दोनों ही समय के घोड़े से गिर गए—अर्थात् समय निकल चुका, और वे उस में भाग न ले सके ॥२॥

यहां कोई विरला ही वीर, स्वार्थी और सत्य के प्रति द्वेष रखने वाले अन्य मनुष्यों का तिरस्कार करके सत्याग्रह के लिए प्रयत्न करता है ॥३॥

अतः हे हृदय ! अपने प्रिय मार्ग को लोगों के कहने से मत छोड़, तथा देश की रक्षा के लिए निश्चयपूर्वक सत्याग्रह कर ॥४॥

देशसेवाकर्मणि सत्यकर्मणि वा कुलीनो विद्यावांश्च प्रेरितो यतते, कुटिलस्तु सत्यप्रेरणां न मनुते—

अजिह्मो राष्ट्रसेवायै, सुखं प्रेर्यः सदा भवेत् ।
कुटिल-स्वार्थ-दग्धानां, नोदनेऽजोऽपि न क्षमः ।।५।।

प्रसङ्गप्राप्तं कुटिलं लक्षणतो विवृणोति—

परार्थं चिन्तयामीति, हेलया स्वार्थसाधकः ।
वैडालव्रतिको लोके, कुटिलः स निगद्यते ।।६।।

व्याजान् नानाविधान् कृत्वा, समयाभावसूचकान् ।
यतते स्वार्थसंसिद्ध्यै[1], कुटिलः सोऽपि कथ्यते ।।७।।

१. स्वात्माभिप्रेतोऽर्थः ।

व्यादायास्यं तु सिंहस्य, दन्तान् सङ्कुलयेत् क्वचित् ।
शक्नोति सत्पथं नेतुं, कुटिलं नेह कश्चन ।।८।।

कदाचिद् यत्नतो मथ्नन्, तोयात्स्नेहमवाप्नुयात् ।
जिह्मं सत्पथि चानेतुं, कृतो यत्नस्तु नश्यति ।।९।।

---

क्योंकि सरल-हृदय, कुलीन और विद्यावान् मनुष्य राष्ट्र की सेवा के लिए सुखपूर्वक हर समय प्रेरित किया जा सकता है। किन्तु कुटिल और स्वार्थी मनुष्यों को ब्रह्मा भी प्रेरित करने में असमर्थ है ।।५।।

मैं तो परोपकार के लिए चिन्तन करता हूं, ऐसा कह कर जो प्रसङ्ग आते ही स्वार्थ-साधन करने वाला तथा विलाव-व्रतधारी हो; वह लोक में कुटिल कहाता है ।।६।।

और जो अनेक प्रकार के बहाने बनाकर, 'समय नहीं है' (मैं तो दिन-रात काम में लगा रहता हूं) इत्यादि वाक्य कहकर स्वार्थ की सिद्धि में तत्पर रहे, वह भी कुटिल कहलाता है ।।७।।

सिंह के मुंह को चौड़ा करके उसके दांतों की गिनती भी प्रयत्न करने पर हो सकती है। परन्तु (उपर्युक्त दुर्गुणोंवाले) कुटिल को यहां सच्चे मार्ग पर लाने में कोई समर्थ नहीं है ।।८।।

यत्नपूर्वक जल के मन्थन से भी सम्भव है कि तैल निकल आए। किन्तु कुटिल को सन्मार्ग पर लाने के लिये तो जो भी प्रयत्न किए जाएं, वे नष्ट ही होते हैं, अर्थात् उस के निमित्त किए जाने वाले सभी प्रयत्न व्यर्थ होते हैं ।।९।।

निरभ्रे नभसि स्नातुं, वृष्टयद्भिरभिवाञ्छति ।
नीत्वा सत्याग्रहे जिह्मान्, विजेतुं यततेऽत्र यः ॥१०॥

विनीय नयवार्ताभिर्दुर्वृत्तं व्यसनान्वितम् ।
सत्याग्रहीय-संग्रामे जिगीषा किं न मुग्धता[1] ॥११॥

१. अत्रार्थापत्तिरलङ्कारः ।

सहसैवोपदिश्य खलान् निनीषुं प्रति—

निनीषति खलान् यस्तु, संयमालङ्कृते पथि ।
जिघ्रासति खपुष्पं स, निष्फले मन्दधीर्नरः ॥१२॥

तत्र हेतुमाचष्टे—

असाधुः साधुवेषेण, विचरन् मानमीहते ।
अनासाद्य तु सम्मानं, कौटिल्यं कुरुते ध्रुवम् ॥१३॥

नश्वरं मल-मूत्राढ्यं, मांस-शोणित-सञ्चितम् ।
राष्ट्रसेवाकृते देहं, हातुं शक्तो न दुर्जनः ॥१४॥

---

इतना ही नहीं, किन्तु जो ऐसे कुटिल व्यक्ति को इस सत्याग्रह में लेकर जीतने का प्रयत्न करता है, वह विना वादलों के आकाश से वृष्टि के जल से स्नान की कामना करता है ॥१०॥

दुष्ट वृत्ति वाले और व्यसनों से भरे हुए मनुष्य को न्याय की वात कह कर अपनी ओर प्रवृत्त करके सत्याग्रह-संग्राम में जीतने की इच्छा करना क्या पागलपन नहीं? अपितु है ॥११॥

इस पद्य में अर्थापत्ति अलङ्कार है।

(यही क्यों ?)—जो मनुष्य संयम से अलंकृत (इस सत्याग्रह के) मार्ग में खल व्यक्ति को लाने की इच्छा करता है, वह मन्दबुद्धि व्यर्थ ही आकाश-कुसुम को सूंघने की इच्छा करता है ॥१२॥

असज्जन पुरुष वाह्याडम्वर से अच्छे चरित्र प्रकट करके भ्रमण करता हुआ सम्मान की कामना करता है। किन्तु जब वह सम्मान को प्राप्त नहीं होता तव निश्चय ही कुटिलता करता है ॥१३॥

दुर्जन पुरुष इस नश्वर, मल-मूत्र से दूषित, मांस और रक्त से बने हुए शरीर को भी राष्ट्र की सेवा के लिए त्याग करने में समर्थ नहीं होता ॥१४॥

प्रवृद्धो हुतभुक् कामं, तोयेन प्रशमं भजेत् ।
त्यक्तधैर्यं तु पुरुषं, नाऽलं ब्रह्माऽपि रक्षितुम् ॥१५॥

पुरुषपशुं विवृणोति—

विकलः पुच्छ-शृङ्गाभ्यां, ज्ञान-विज्ञान-वर्जितः ।
अन्नादः पशुवज्ज्ञेयो, यो न धर्माय कल्पते ॥१६॥

रतिर्धर्मे न राष्ट्रस्य, सेवायां नो रतं मनः ।
येषां ते वपुषो भारं, वहन्तोऽटन्ति भूतले ॥१७॥

दुर्जनसङ्गतिं वारयति—

दुर्गमारण्य-गिरिषु, पशुभिः पक्षिभिः सह ।
संवासः सुचिरं श्रेयान्, न पुनर्दुष्ट-सङ्गमः ॥१८॥

समुद्रस्य तलं प्राप्य, जीवितुं प्रभवेन्नरः ।
परं खल-दले लीनमजोऽप्यवितुमक्षमः ॥१९॥

प्रसङ्गप्राप्तं खलं लक्षणतो वर्णयति—

---

आग यदि अधिक बढ़ जाए, तो वह पानी से जैसे-तैसे बुझाई जा सकती है। किन्तु जो धैर्य से रहित पुरुष होता है, उस को तो ढाढस बंधाने में ब्रह्मा भी समर्थ नहीं हो सकता ॥१५॥

जो धर्म की रक्षा के लिए तैयार नहीं रहता, उस पूंछ और सींग से रहित, ज्ञान एवं विज्ञान से शून्य और (केवल) भोजन-परायण मनुष्य को पशु के समान जानना चाहिये ॥१६॥

जिन मनुष्यों की न तो धर्म में रति है, न राष्ट्र की सेवा करते हैं, न शास्त्रों का चिन्तन करते हैं, (न तपस्या में लीन रहते हैं और न दान में प्रवृत्ति रखते हैं) वे पुरुष शरीर को धारण करते हुए भी इन्द्रियों के दास बने हुए पृथिवी पर भाररूप होकर विचरण करते हैं ॥१७॥

दुर्गम अरण्यों में व गहन पर्वतों पर पशु और पक्षियों के साथ चिर-काल तक रहना अच्छा तथा कल्याणकर है। किन्तु दुर्जन मनुष्य के साथ (क्षण भर का भी) सहवास उचित नहीं है ॥१८॥

मनुष्य समुद्र के तल में पहुंच कर भी (भाग्यवश) जी सकता है। पर कुटिलों के समुदाय में फंसे हुए की तो ब्रह्माजी भी रक्षा नहीं कर सकते ॥१९॥

स्खलन्तो धर्म-कार्येषु, स्वार्थसन्धान-तत्परा.।
दूरगा राष्ट्रकृत्येषु, खलाः स्युर्लोक-गर्हिताः ॥२०॥

मूर्खस्य मोहं दर्शयति—

मृगतृष्णा-जलं वीक्ष्य, कविभिः किञ्चिदूह्यते।
परन्त्वज्ञानमोहान्धैस्त्यज्यतेऽर्थः करस्थितः ॥२१॥

अत्रोदाहरति—

वाताद[1]-स्नेह-जिघृक्षुः-क्षिप्तं तोयं प्रपीय[2] वै।
त्यज्यते वायुसंहर्त्रा[3], मोहात् स्नेहः स्वको यथा ॥२२॥

१. बादाम इति प्राकृताः। २. पीङ् पाने। ३. वायु-संहर्त्रा=वातादेनेति।

सम्यङ् नुन्नोऽपि कुटिलो, गतिं वामां जहाति नो।
किं गव्यं मधुरं पीत्वा, सर्पो नोद्गिरते विषम् ॥२३॥ आत्मनेपदं दुष्यति

अद्रेः शृङ्गं कथमपि नरः पर्यटन् वाऽधिरोहेत्,
सर्पं कालानलसमविषं धारितुं वा क्षमः स्यात्।

---

धर्म कार्यों में शिथिल-मनोवृत्ति वाले, स्वार्थ-साधन में तत्पर, और राष्ट्रीय कार्यों में पीछे रहने वाले, लोक से निन्दित 'खल' होते हैं ॥२०॥

मृगतृष्णा के जल को देख कर कवि=बुद्धिमान् व्यक्ति तो कुछ सार निकाल भी लेते हैं (जैसे—यह संसार मृगमरीचिका के समान व्यर्थ है। इस का त्याग करना चाहिए, आदि), पर ज्ञानरूपी प्रकाश के अभाव से अन्धा तो अपने हाथ में स्थित वस्तु को भी मोह-वश छोड़ देता है ॥२१॥

जैसे कि बादाम का तेल निकालने वाला जल का पुट देकर जब उसे कूटता है, तब वह वात को नष्ट करने वाला बादाम मोहवश पानी को ग्रहण करके तेल (जो उसका सर्वस्व है, उस) को छोड़ देता है ॥२२॥

अच्छी तरह शिक्षा देने पर भी कुटिल अपनी वाम गति को नहीं छोड़ता। जैसे सर्प मधुर दूध पीकर क्या जहर नहीं उगलता? ॥२३॥

मनुष्य घूमता-फिरता किसी तरह पहाड़ की चोटी पर भी चढ़ सकता है। कालाग्नि के समान विषवाले सर्प को भी वह धारण कर सकता है। भीषण जल-जन्तुओं (के प्रहार आदि) का भी निवारण करने में

रोध शक्तोऽप्यथ भुवि भवेद् यादसां भीषणानां,
जिह्मस्याहो परमिह मनाग् भेषजं नास्ति लोके ।।२४।।

आत्रेय-धन्वन्तरि-मार्ग-यायिनौ, विषापहाराय सदा प्रभू स्तः ।
मूर्खस्य दोषापगमाय हा पुनर्न, मान्त्रिको नैव च भैषजः प्रभुः।।२५

साम्प्रतं कारागृहे दैन्यदर्शिनः सत्याग्रहिणो लोकप्राप्तां दशां दर्शयति—

सत्याग्रही प्रीतिमुपैति पूर्वं, तमाद्रियन्ते पुरुषाः समस्ताः ।
धनेन धान्येन च पुष्पमाल्यैः, प्रोत्साह्य चैनं वचसोन्नयन्ति ।।२६।।

एवं प्रतिष्ठा-शिखरं सुखेन, लब्ध्वा ततो भ्रश्यति दैन्यदर्शी ।
धैर्याच्च्युतानां पतनं तथा स्याद्, यथा द्रुमाणामवनौ निपातः ।२७।

उक्तं द्रढयति—

विधाय दुष्कृतिं मूढः, स्वयं कीर्तिं व्यपोहति ।
क्षिप्त्वा भाण्डं यथा काकस्तद्ध्वनेश्चोत्पतत्यसौ ।।२८।।

---

समर्थ हो सकता है । किन्तु इस भूलोक में कुटिल प्राणी की कुटिलता को दूर करने के लिए कोई औषध नहीं है ।।२४।।

चरक-प्रणेता ब्रह्मसम्प्रदायाचार्य महर्षि 'आत्रेय' और क्षात्रसम्प्रदायाचार्य भगवान् 'धन्वन्तरि' इन दोनों के मार्ग पर चलने वाले मन्त्र और भेषज दोनों ही प्रकारों से विष को दूर करने में समर्थ हैं । किन्तु खेद है कि मूर्ख के दोषरूपी विष को उतारने में न मान्त्रिक समर्थ है, और न भैषज=वैद्य ।।२५

सत्याग्रह के प्रारम्भ में सत्याग्रही प्रसन्नता को प्राप्त होता है, तथा समस्त पुरुष=समाज उस का आदर करते हैं । कोई धन देकर और कोई धान्य देकर तथा अन्य पुष्प-हार आदि देकर उस के उत्साह को बढ़ाते हुए वाणी के द्वारा साधुवाद देते हैं ।।२६।।

इस प्रकार प्रतिष्ठा के शिखर को सुख से प्राप्त करके (कारागार के कष्टों से घबरा कर) दीनता दिखाने वाला (उस शिखर से) गिर जाता है । फिर जैसे वृक्षों से गिरे हुए फूल धूल में गिरकर मिट्टी में मिल जाते हैं, वैसे ही उन धैर्य से च्युत होने वालों का भी पतन होता है, और वे भी मिट्टी में मिल जाते हैं ।।२७।।

मूढ़ पुरुष अपनी कीर्ति को दुष्कर्म करके स्वयं मिटा देता है । जैसे—कौआ मूढतावश किसी पात्र (भांडे) को स्वयं गिरा कर फिर उससे उठी हुई प्रतिध्वनि से भयभीत होकर उड़ जाता है ।।२८।।

## प्रथमाध्यायस्य 'सुजनप्रशंसात्मकः' द्वितीयः पादः

तत्र तावत् सुजन-प्रशंसने हेतुं युग्मेनाह—

जातोऽस्य[1] सत्त्वाद् विधुरिन्द्रियेशो[2],
लोके प्रसिद्धः स जलाधिराजः।
आपो हि निम्नेऽभिसरन्त्यजस्रं,
मनस्तथैवेति तमः प्रभावात् ॥१॥

नीचैस्तमः सत्त्वमिहोक्तमुच्चैः,
शीतांशुसत्त्वे[3] रवितश्चकास्तः।
पिस्पर्धिषुर्ना सुपथं समेयात्,
स्तुत्योऽस्त्यतोऽसौ कविना सुवर्त्मा ॥२॥

१. अस्य प्रजापतेर्मनसश्चन्द्रमा जातः, 'चन्द्रमा मनसो जातः' इति यजुषि (अ० ३१, मं० १२) उक्तत्वात्। स चन्द्रमा प्राणिनां मनसो देवता, स लोके जलाधिराजोऽपि प्रसिद्धः। तस्माद्यथा जलं नीचैर्वहति, तथैव जलदेवतात्वान्मनसः मनोऽपि मोहादीनासाद्य नीचैस्सरणशीलम्। मनसो नीचैस्त्वं किम्? तमोगुणः। उच्चैस्त्वं किम्? सत्त्वगुणः। शीतांशुश्चन्द्रो रविकिरणैः प्रकाशते। उक्तञ्च श्रुतौ 'सूर्य आत्मा जगतस्तस्थुष श्च' (यजु० अ० ७, मं० ४२)। एतेन सिद्धं यदस्माकमन्तरात्माऽपि सूर्य एव। अत एवोक्तं 'शीतांशुसत्त्वे रवितश्चकास्तः' इति।

२. इन्द्रियस्य=मनसो देवता, षष्ठमिन्द्रियं मन इति विवक्षितम्। तस्य मनस ईश इति फलितोऽर्थः।

३. सत्त्वं=मनः। तथा चात्र श्रुतिप्रसिद्धवचसां प्रदर्शनेन स्वाभीष्टं समर्थितम्, अतः 'श्रुत्यलङ्कारः'।

---

प्रजापति के सत्त्व से मन के अधिपति चन्द्रमा की उत्पत्ति हुई है, और वह लोक में जल के अधिदेवता के रूप में भी प्रसिद्ध है। तथा जल का यह स्वभाव है कि वह नीचे की ओर जाता है, उसी प्रकार तमोगुण के प्रभाव से मन भी नीचे की ओर जाता है। यहां तमोगुण को नीच और सत्त्वगुण को उच्च कहा गया है। चन्द्र और मन ये दोनों सूर्य=आत्मा से प्रकाशित हैं। सत्याग्रही मनुष्य सच्चे मार्ग का अनुसरण करता है, इसलिये सत्यपथगामी वह कवि के द्वारा वन्दनीय है ॥१-२॥

तत्र भाग्यनगरीयकारागृहेषु कीदृशः पुरुषाः सत्याग्रहमारभमाणा आसन्निति तान् पद्येनैकेन निर्दिशति—

वेदज्ञानकृते प्रयासबहुला धीराः प्रशान्ताश्च ये,
विख्याताः खलमर्दनेऽथ यमिनः[1] कायेन वज्रोपमाः[2] ।
स्वातन्त्र्यं निजजन्मसिद्धमखिलं लब्धुं हि सत्याग्रहं,
कृत्वा सन्त्यथ बन्धनालयगता भूपस्य तद् दुर्मतम्[3] ।।३।।

१. संन्यासिनो ब्रह्मचारिणश्च । २. सुदृढशरीरा मल्ला इति । ३. भूपो हि यदा दुर्मन्त्रणामुपेत्यान्याय्यान् नियमान् निर्मिमीते, तदा तान् नियमानुल्लंघयन्ति प्रजाजनाः, राजा च तान् कारावासे वासयति । वस्तुतत्त्वचिन्तनेन ज्ञायते यन्मौर्ख्यं तु राज्ञ एव, परन्तु दण्डयति प्रजाजनान् । तस्माद् वक्तुमर्हते—'भूपस्य तद् दुर्मतम्' इति ।

येषां नियमानां विरोधाय सत्याग्रह आस्थितस्तानष्टनियमान्निर्दिशति—

निषिद्ध आसीत् किल तत्र यज्ञः,
सम्भूय[1] सन्ध्याऽपि निवारिताऽभूत् ।
सस्कार-कृत्यानि निराकृतानि,
देवालयानां रचना निषिद्धा ।।४।।

१. सम्भूय=एकीभूयेति ।

हैदराबाद राज्य में प्रयुक्त सत्याग्रह के कारण कारागार में कैसे-कैसे व्यक्ति थे । उनका वर्णन करते हुये कवि कहता है कि—जिन्होंने वेद-शास्त्रों का ज्ञान प्राप्त करने के हेतु बहुत परिश्रम किया है, जो धीर हैं, जो शान्त हैं, जो दुष्टों के दलन में प्रसिद्ध हैं, जो इन्द्रियों का दमन करने वाले संन्यासी और ब्रह्मचारी हैं, और जो वज्र के समान सुदृढ शरीरधारी पहलवान हैं । वे सब राजा की दुर्बुद्धि के कारण हैदराबाद राज्य के कारागार में अपने जन्मसिद्ध स्वातन्त्र्य की प्राप्ति के लिये सत्याग्रह करके बन्धन को प्राप्त हुये हैं ।।३।।

क्यों कि उस राज्य में निम्नलिखित कार्य निषिद्ध थे—

वहां यज्ञ करने का निषेध था । एक साथ सामूहिक रूप में सन्ध्या करने की भी आज्ञा नहीं थी, (जो षोडश संस्कार हिन्दुओं में किए जाते हैं उन) संस्कारों के करने पर रोक लगा दी गई थी, और देवमन्दिरों के निर्माण पर भी प्रतिबन्ध था ।।४।।

जराकृशस्यामरमन्दिरस्य, जीर्णोद्धृतिश्चापि निवारिताऽभूत् ।
सुरालयेष्वात्मगृहेषु किं वा, ध्वजोच्छृतश्चापि नृपेण रुद्धः ॥५॥

तद्राज्यबाह्यस्य च धर्मदेष्टु—
धर्मोपदेशोऽपि निषिद्ध आसीत् ।
तद्देशसम्भूतजनोऽपि तद्वत्,
सद्धर्मकार्याय निवारितोऽभूत् ॥६॥ कार्यात्

यदाप्तुमाज्ञां नृभिरर्थ्यते स्म, न्यायालये तेऽधिकृता निमित्तैः ।
सन्दूष्य तान् नेति वचोऽभिभाष्य, पौरान्कुर्वन् सततं निराशान् ॥७

धर्माच्च तर्कादथ राजनीतेः, पराङ्मुखं वीक्ष्य नृपं समन्तात् ।
सर्वे निरुद्धात्म-मनोविकारा, सत्याग्रहार्थैकधियो बभूवुः ॥८

सत्याग्रहारम्भकालं निर्दिशति—

भूत[५]नन्दा[९]ङ्क[९]चन्द्रा[१]ब्दे, पौषे विक्रमवर्षतः ।
सत्याग्रहः समारब्धः, पूर्वं तत्पुरवासिभिः[१] ॥९॥

१. अङ्कानां वामतो गतिरित्यनुशासनादत्र १९९५ तमोऽब्द-स्तदनुसारं यीशोः १९३८ तमवर्षस्य दिसम्बरमासो ग्राह्यः ।

---

किसी पुराने ध्वस्त मन्दिर का जीर्णोद्धार नहीं करने दिया जाता था। देव-मन्दिरों पर अथवा अपने घरों पर ध्वज लगाना भी राजाज्ञा से दण्डनीय था ॥५॥

हैदराबाद राज्य से बाहर के किसी धर्मोपदेशक का राज्य में आकर धर्मोपदेश करना निषिद्ध था। इसी तरह इस राज्य के निवासी द्वारा भी राज्य में किसी प्रकार की धर्म-प्रवृत्ति निवारित थी ॥६॥

यदि वहां की जनता के द्वारा किसी धार्मिक कार्य के करने की आज्ञा मांगी जाती थी, तो न्यायालय के अधिकारी मनमाने कारण अथवा दूषण बतलाकर नकारात्मक सूचना के द्वारा पौरजनों को सदा निराश कर देते थे ॥७॥

धर्म तर्क और राजनीति से सर्वथा पराङ्मुख वहां के राजा को देखकर, वहां के धार्मिक प्रजाजनों ने अपने मन के सभी दुष्ट विचारों को रोकते हुए सत्याग्रह करने के लिए निर्णय किया ॥८॥

वि० सं० १९९५ के पौष मास में अर्थात् सन् १९३८ के दिसम्बर मास में हैदराबाद के निवासियों ने पहले सत्याग्रह आरम्भ किया ॥९॥

ततस्तं चिर-सञ्चारं, कर्त्तुमाङ्गलराज्यतः।
प्राज्ञास्तत्र समायाता, आदिष्टा रण-संसदा[१]॥१०॥

१. सत्याग्रह-संचालिका समितिः।

नीतः सोऽर्थाप्तिसयुक्तः, सन्धिपूर्वं समाप्तिताम्।
अङ्ग[६]नन्दा[९]ङ्क[९]चन्द्रा[१]ब्दे, श्रावणस्य जिनां[२४]शके॥११॥

१. द्वितीयश्रावणकृष्णाष्टमी २४ वि० सं० १९९६, तदनुसारं ८ अगस्तः १९३९ तम ईशवीयाब्दः।

सत्याग्रहस्य तपसो माहात्म्यं वर्णयति—

शत्रोर्दृष्टिपथं न याति हि तपस्तेजः परं यच्छति,
दिष्टया तद्धि निपीडयमानमनिशं वृद्धिं मुदा गच्छति।
कल्पान्तेष्वपि नालमस्ति सबलो रोद्धुं सुतप्तं तपः,
सम्मानाय यतस्व भूप[१]! तपसां[२] कीर्तिं यतः प्राप्स्यसि॥१२॥

१. राज्ञः सम्बोधनाभावे पाठकैः—'मान्य-सभ्य-विप्र-पूज्य-प्रभृतयः' शब्दा भूपशब्दस्थाने परिवर्त्त्य यथायथं प्रयोगः पद्यनिर्माण-पुरस्सरं कार्यः। एवमेव सर्वत्रात्र काव्ये पाठकेनोहाः कल्पनीया भवन्ति, वाच्यस्यातिबहुत्वात्। २. तपः शब्दोऽत्र तद्वति।

---

तदनन्तर उस सत्याग्रह संग्राम को चिरकाल तक चलनेवाला बनाने के लिए, अंग्रेजी राज्य एवं अन्य राज्यों से 'सत्याग्रह सञ्चालक समिति' का आदेश पाकर अनेक विज्ञजन वहां आए॥१०॥

इस के पश्चात् यह सत्याग्रह-युद्ध वि० सं० १९९६ के दूसरे श्रावण की कृष्णा अष्टमी को (तदनुसार सन् १९३९ की आठवीं अगस्त को), परस्पर समझौता होने से तथा उचित मांग के स्वीकार हो जाने से, समाप्त किया गया॥११॥

[अधोलिखित पद्यों से राजा=प्रचलित समय के शासक को उद्-बोधन दिया गया है—]

हे राजन्! इस सत्याग्रह के तप का माहात्म्य बहुत बड़ा है—यह सत्याग्रहरूपी तप शत्रु की दृष्टि में नहीं आता है, किन्तु तेजस्वी बनाता है। और यदि इस का दमन किया जाता है, तो यह और भी अधिक वृद्धि को प्राप्त होता है। अधिक क्या कहें! कल्पान्त में भी कोई भी बलवान् अच्छे प्रकार से आराधित इस तप को रोकने में समर्थ नहीं है। अतः

कुत एवम् ?—

शमप्रधानैस्तपसाऽतिदीप्तैः, सञ्चीयते वह्निसमं हि तेजः ।
प्रदाहशील हि तपोऽस्ति यस्माद्भस्मत्वमायाति नरोऽवमन्ता ।। १३

प्रलोभनैर्विविधयन्त्रणाभिश्च सत्याग्रही च्यावयितुं न शक्यते—

सत्याग्रहज्ञानजुषो नरा ये, तच्च्यावने नालमिहास्ति लक्ष्मीः ।
नूनं दवाग्नेः शमने समर्थो, वायुः कदाचिन्न समृद्धवेगः ।।१४।।

इत्थं प्रभूतैः परियन्त्रणैश्च, प्रपीड्यमानाः प्रततिं प्रयान्ति ।
दृष्ट्वा मनःक्षोभफलानुबन्धं[१], निरुन्त्स्व यत्नं विफलं महीप ।।१५।।

१. मनःक्षोभात्मकं फलमनुबध्नाति तम् ।

सत्याग्रहिणः स्वभावदार्ढ्यं वर्णयति—

[१]आतङ्कयाग्रहिणं राजा, शक्तः स्यात् तदसुक्षये ।
किन्त्वजो[२]ऽप्यस्य नालं स्याद्, गतिं रोद्धुं शुभावहाम् ।।१६।।

१ 'तकि कृच्छ्रजीवने' भ्वादिर्णिजधिकः । २. अजः=स्वयम्भूः।

---

इन सत्याग्रही तपस्वियों के सम्मान का प्रयत्न करो । इससे तुम्हारा यश बढ़ेगा ।।१२।।

क्यों कि शान्ति-प्रधान और तपस्या से दीप्त ऐसा अग्नि-तुल्य तेज सत्याग्रहियों के द्वारा सञ्चित किया जाता है । और इस तप का स्वभाव ही जलाने का है । अतः जो इस का अपमान करता है, वह भस्म हो जाता है ।।१३

जिन्होंने सत्याग्रह का व्रत लिया है, उन मनुष्यों को अपने मार्ग से डिगाने में धन का लोभ समर्थ नहीं है । जैसे दावानल को बुझाने का सामर्थ्य वायु के प्रचण्ड वेग में नहीं होता ।।१४।।

इस प्रकार अनेक यन्त्रणाओं से पीडित किये गये सत्याग्रही दिनोंदिन वृद्धि को प्राप्त होते हैं । अतः हे राजन् ! परिणाम में मन को दुःखित करने वाले इस विफल प्रयास को रोक दो ।।१५।।

राजा सत्याग्रही को पीडित करके उस के प्राण हरण कर सकता है । पर उस की कल्याणमयी गति को रोकने में तो ब्रह्मा भी समर्थ नहीं हो सकता ।।१६।।

आग्रहस्य माहात्म्यं वर्णयति—

मर्त्येनाग्रह एव कार्य उचितः सत्येन चेत् संयुतो,
दुष्प्रापान् सुलभान् करोति भुवने धन्योऽस्ति सत्याग्रहः ।
धैर्येणाग्रहमेत्य संयतमना कीर्ति परां विन्दते,
निष्पापाग्रहतः प्रमथ्य पिशुनान् स्वर्गे परे राजते ॥१७॥

कल्याणस्यैकभूमिर्विविध-मलहरः पावनः पावनानां,
पाथेयं यन्महार्घं सपदि निजपद-प्राप्तये प्रस्थितस्य ।
विश्रान्ति-स्थानमेकं कविवर-वचसां जीवनं सज्जनानां,
दिव्यः सत्याग्रहोऽयं प्रभवति विदुषां भूतये सर्वदैव ॥१८॥

सुकृतिभिरेव सत्याग्रहः कर्त्तुं शक्यते—

सुकृतीह नरः कश्चिल्लोके सत्याग्रहे क्षमः ।
विचलन्ति परे पापाः, शिश्नोदरपरायणाः ॥१९॥

सत्याग्रहस्य शक्त्यतिशयं वर्णयति—

दुर्वासनां मलिन-सत्त्वजनस्य भिन्दन्,
निन्दन्त्सदा दुरितदर्प-भवान् विकारान् ।

---

यदि कोई सच्ची मांग है, तो उसके लिये मनुष्य के द्वारा सत्याग्रह किया जाना ही उचित है । क्योंकि यह सत्याग्रह बड़ा धन्य है, कि जो अलभ्य को सुलभ बना देता है । धैर्य्यपूर्वक सत्याग्रह का सहारा लेकर संयमी सत्याग्रही परम यश को प्राप्त करता है । और सत्याग्रह से ही दुष्टों का नाश करके स्वर्ग का भागी बनता है ॥१७॥

यह सत्याग्रह कल्याण की एकमात्र भूमि है । अनेक मल पापों को दूर करने वाला है, पवित्रों में पवित्र है । अपने लक्ष्य की सिद्धि के हेतु निकले हुए मनुष्य के लिए बड़ा ही कीमती राह का 'कलेवा' है । कविवरों की वाणी का एकमात्र विराम-स्थान है । सज्जनों का जीवन है, और दिव्य=अलौकिक है । यह विद्वानों के कल्याण के लिये सदा समर्थ है ॥१८॥

इस संसार में कोई विरला ही सुकृति सत्याग्रह करने में समर्थ होता है । और अन्य जो इन्द्रियभोग और उदरपूर्ति के निमित्त विचलित हो जाते हैं, वे पामर हैं ॥१९॥

यह सत्याग्रह मनुष्य के द्वारा सेवित होने पर मलिन भाववाले मनुष्य की दुर्वासना को भेदता हुआ, पाप और अभिमान से उत्पन्न विकारों की

नित्यं विरञ्चि-सदृशैर्लषितां सुशक्तिं,
सत्याग्रहो वितनुते मनुजेन जुष्टः ॥२०॥

सत्यं नरा वच्मि न पक्षपातात्, सर्वेषु लोकेषु सुखैकहेतोः।
सत्याग्रहाच्छ्रेष्ठतमोऽस्ति नान्यद्, मिथ्याग्रहान्निम्नतरो न किञ्चित्॥२१

निरुद्ध्य दुर्दान्त-मनोविकारान्[1], प्राज्ञाः! ससंक्षेपमुदाहरन्तु[2]।
सत्याग्रहः स्याद्यदि भूपचित्ते[3], कुतः प्रजानां दुरिताग्रहः स्यात् ॥२२

१. ईर्ष्या-शोक-भय-क्रोध—मान-द्वेषादयश्च ये।
मनोविकारास्तेऽप्युक्ताः,सर्वे प्रज्ञापराधजाः॥
चरकसू० स्था० ८।५२॥

प्रज्ञाऽपराधोऽपि मत्कृते 'नाडीतत्त्वदर्शने' एककोटिरष्टत्रिंशल्लक्षाणि चतुर्विंशतिसहस्राणि नवशतं पञ्चनवति च—१३८२४९९५ संख्यात्मको भेदप्रभेदैः संख्यातो वर्त्तते। प्रज्ञापराधस्य बहुत्वात् सूक्ष्मत्वाच्च वेदेषु वेदानुसार्यार्ष-ग्रन्थेषु च प्रज्ञापरिष्काराय पुनः पुनर्विधानमाधीयमानं सयुक्तिकं सङ्गच्छत एव॥ नाड़ीतत्त्व०अ० ७।

२. प्रज्ञापराधोत्थं वृथा हठादिदोषप्रयुक्तं वाग्जालं परित्यज्य संसारं वदन्त्विति।

३. अस्मिन्नपि पदे 'शत्रोर्दृष्टिपथं न याति हि तपः' इत्यादिके श्लोके कृतमूहाविधानमूहीकृत्य सर्वत्रोहाः कल्पनीयाः कविकर्मदक्षैः।

यावदेव नृपचेतसि स्फुरत्येष सत्यज-विवेक-दीपकः[1]।
तावदेव भवति श्रदाग्रह[2]-प्रीतिमाननृत-मोचनेच्छुकः ॥२३॥

---

सदा निन्दा करता हुआ, ब्रह्मा आदि के द्वारा वाञ्छनीय उत्तम शक्ति को नित्य वितरित करता है ॥२०॥

हे मनुष्यो! मैं सत्य कहता हूं पक्षपात से नहीं, कि तीनों लोक में सुख-प्राप्ति का एकमात्र हेतु सत्याग्रह से श्रेष्ठतम दूसरा नहीं है। तथा मिथ्याग्रह=झूठ के प्रति आग्रह से बढ़कर अन्य नीचतम नहीं है ॥२१॥

दुःख से दमन करने योग्य मन के ईर्ष्यादि विकारों को रोककर हे प्राज्ञजनो! बिना हठाग्रह के साररूप में कहिए कि—'यदि राजा के चित्त में सत्य के प्रति आग्रह हो, तो फिर प्रजा का दुराग्रह क्यों होवे'? ॥२२॥

यह सत्य से उत्पन्न ज्ञानरूपी दीपक जब तक राजा के चित्त में प्रकाशमान होता है, तब तक ही वह सत्याग्रह से प्रीति करने वाला और झूठ

१. 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युपनिषत्सूक्तत्वात्, तज्जो विवेको वेदस्तस्य दीपको ज्योतिरिति। अर्थात् यावत् सत्यज्ञानाप्तये यतते तावत् सत्याग्रहमत् चितं भवति। २. अत्र केचिद् ब्रुवते—श्रदव्ययस्य दधातिनैव सम्बन्धो भवति नान्येन, तन्नेति सत्यदेवो वासिष्ठः। कुतः ? 'श्रद्धातौ' भोजव्याकरणे ६-१-१२९ इति सूत्रं दधातिना योग उपसर्गसंज्ञा-नियामकं, न तु श्रदव्ययस्य दधातेरन्यत्र प्रयोगाभावं कथयति। श्रदाग्रहः=सत्याग्रह इति। अत्र रूपकालङ्कारः।

सत्येनोत्तम्भिता भूमिः, सत्येनोत्तम्भितं वियत्।
सत्येन वाति वायुश्च, सत्ये सर्वं प्रतिष्ठितम् ॥२४॥

सीदन्ति ये विविधदोषकुलीरयुक्ते[1],
मोहाद्विचल्य[2] मनुजा भवसिन्धुमध्ये।
हा हेति पान्त्विति गिरा करुणार्द्रसत्त्वा-
स्तानुद्दिधीर्षुरिव तारयतीह सद्यः ॥२५॥

१. कुलीरो मकरः। २. स्खलनं प्राप्य।

पुत्रं स्त्रियं धनमथो[1] विपुलं च राज्यं,
संयाच्यमानमिह राति यथा तदीप्सम्।
व्यक्तं हि भक्ति-पटुकं मनुते च नैजं,
सत्यं हि सत्यमनसा मनुजेन जुष्टम्[2] ॥२६॥

छोड़ने की अभिलाषा वाला होता है ॥२३॥

सत्य से ही पृथिवी टिकी हुई है, सत्य से ही आकाश ऊपर टिका हुआ है। सत्य से ही वायु बह रहा है, और सत्य में ही सब स्थित है ॥२४॥

जो मनुष्य अनेक प्रकार के मकरादि जल-जन्तुओं से युक्त संसाररूपी समुद्र के बीच में मोह से विचलित होकर दुःख पाते हैं। उन की 'हाय ! हाय ! रक्षा करो ! रक्षा करो' ! इस प्रकार की वाणी के द्वारा दया से आर्द्र होकर सत्य स्वयं उनके उद्धार करने की इच्छा वाले की तरह शीघ्र ही उन्हें पार कर देता है ॥२५॥

सच्चे हृदय से मनुष्य के द्वारा सेवित यह सत्य=सत्याग्रह निश्चय ही पुत्र, स्त्री, धन, विशाल राज्य और अपनी इच्छानुसार जो भी मांगा जाय उसे प्रदान करता है। स्पष्ट ही जो इस की भक्ति में तत्पर हो, उस को अपना ही मानता है अर्थात् आत्मसात् कर लेता है ॥२६॥

१. अथ उ=अथो, उनिश्चयार्थे। २. तद्यथा 'राजा हरिश्चन्द्रः सती सावित्रीत्यादयः' इतिहासप्रसिद्धाः। ऐतिह्योऽलङ्कारः।

सत्याग्रहिलक्षणं द्वाभ्यां पद्याभ्यामाह—

सत्यत्यागतपोदयागुणयुतः शौचक्षमाभूषितः,
पापाचाररतस्य दर्पदलनो धीरः सदैवापदि।
हिंसा-त्याग-रतः सुकर्मणि यतः सेवायुतः सात्त्विको,
यस्त्वेतैर्भुवि भासतेऽतिविमलः सत्यः स सत्याग्रही॥२७॥

विड्विट्पञ्चक[1]मङ्गभङ्गजभयो[2] दारिद्र्य-लोकेषणे,
शीतोष्णं धनधान्यबन्धुवनिता वाचश्च मौर्ख्यस्पृशः[3]।
हृद्ये वस्तुनि सक्तिरात्म—विमतिर्दर्पः कुलस्यात्मनः,
शक्ताश्च्यावयितुं न यं श्रुतिधरं[4] सत्यः स सत्याग्रही॥२८॥

१. पञ्चज्ञानेन्द्रियविषयाः। उक्तञ्च—कुरङ्गमातंगेत्यादि। २. शरीराङ्गभंगोत्थो भयः। ३. मूर्खाणां वचांसि, तदात्वपश्यतां वा वचांसि। ४. स्मृतलब्धोपदेशम्।

सत्त्वे सुमार्गिणः क्रोधो, विद्यते शत्रुभिश्च[1] किम्?
क्षमा चेद्विद्यते स्वान्ते, वर्मणा[2] किं प्रयोजनम्[3]॥२९॥

१. चकारोऽत्र चेदर्थे। २. कवचेनेति। ३. तथा चाह विदुरः-
एकः क्षमावतां दोषो, द्वितीयो नोपपद्यते।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः॥

---

[सत्याग्रही के लक्षण—] सत्य, त्याग, तप और दया के गुणों से युक्त, पवित्रता और क्षमा से विभूषित, पापाचरण करने वालों के गर्व का खण्डन-कर्त्ता, आपत्ति में धैर्यवान्, अहिंसा में तत्पर, सत्कर्म में लीन, सेवाभावी और सात्विक भाव से भरा हुआ, इन गुणों से युक्त होकर जो पृथिवी पर शोभायमान हो रहा है, वही पवित्र और सच्चा सत्याग्रही है॥२७॥

रूप, रस, गन्ध, स्पर्श और शब्द ये पांच ज्ञानेन्द्रिय के विषय, हाथ-पैर टूट जाने का डर, दरिद्रता, लोकेषणा, सर्दी-गर्मी, धन-धान्य, बन्धु, स्त्री, मूर्खतापूर्ण वचन, प्रिय वस्तु के प्रति आसक्ति, [प्रसङ्गवश] अपने मन में उपजी हुई कुबुद्धि, अपना और अपने कुल का अभिमान, ये जिस शास्त्रज्ञ को अपने मार्ग से विचलित करने में समर्थ नहीं होते, वही सच्चा सत्याग्रही है॥२८

यदि सत्यमार्गानुयायी के शरीर में क्रोध विद्यमान है, तो शत्रुओं से क्या प्रयोजन है? अर्थात् वह क्रोध ही शत्रु का कार्य करता है। और यदि

यदि सत्याग्रही बन्धुस्तत्रौषधमनर्थकम्[१] ।
दुर्जनाः सन्ति चेत् साकं, रोगैः[२] किन्नु प्रयोजनम् ॥३०॥

१. वक्ष्यति चाग्रे चतुर्थाध्यायस्य चतुर्थे पादे—'आत्मीयवर्गोऽपि रुजा न रुज्यते' इत्यादि । २. दुर्जनो हि बुद्धिं विकारीकृत्य प्रज्ञामपराधयति । प्रज्ञापराधमूला हि रोगाः शारीरमानसा भवन्ति । तस्मादिदमुच्यते—'दुर्जनाः सन्ति चेत्' इति । अत्र कैमर्थ्येनौषधादीनां निरर्थकत्वप्रदर्शनेन प्रतीपालङ्कारः ।

जात्यादौ त्यागवृत्तिश्चेद्, धावते पुरतो धनम् ।
सञ्चितेनाऽपि किं तेन, कोषेषु निहितं यदि ॥३१॥

साधुस्तु पापतो व्रीडां, व्रजत्येवान्तरा[१] कुलः ।
रममाणस्तु कौटिल्ये, कुटिलो नैव लज्जते ॥३२॥

१. अन्तःकरण आकुल इति यावत् । तथा च विदुरः—

य आत्मनाऽपत्रपते भृशं नरः, स सर्वलोकस्य गुरुर्भवत्युत ।
अनन्ततेजाः सुमनः समाहितः, स तेजसा सूर्य इवावभासते ॥

चन्द्रः कलङ्कयुक्तोऽपि, द्युतिं शुभ्रां प्रयच्छति ।
तथाऽल्पार्थं[१] वचः साधो, परं शुभ्रायते मनः ॥३३॥

१. अर्थशब्दोऽत्र व्यापकमर्थमधिकृत्य प्रयुक्तः । अर्थ्यते प्राप्यत इत्यर्थः । अर्थयन्ति प्राप्नुवन्ति यं वेति सोऽर्थः । ते च गुणाः सिद्धयो

---

उसके हृदय में क्षमा विराजमान है, तो कवच से भी क्या प्रयोजन है ? अर्थात् क्षमा ही कवच है ॥२९॥

यदि सत्याग्रही बन्धु=हितचिन्तक हैं, तो औषध से क्या प्रयोजन है ? हितचिन्तक ही औषध का कार्य देते हैं । और यदि दुर्जन साथ में हैं, तो रोगों से भी क्या प्रयोजन है ? अर्थात् दुर्जन ही एक प्रकार के रोग हैं, जिनसे सज्जन सदा दुःखी रहता है ॥३०॥

जाति, धर्म, समाज और देश के निमित्त यदि त्याग की भावना होती है, तो धन स्वयं सम्मुख उपस्थित होता है । अन्यथा उस धन के सञ्चय से क्या लाभ, जो केवल सञ्चय करके खजाने में या तिजोरियों में रख दियाजाय ? [अतः अपने धन को जाति, धर्म आदि के उपयोग में लगाना चाहिये] ॥३१॥

जो सज्जन होता है, वह तो लेशमात्र पाप हो जाने से भी मन में दुःखित होता हुआ लज्जित होता है । किन्तु जो कुटिलता में निरन्तर लीन रहता है, वह कुटिल [कभी] लज्जित नहीं होता है ॥३२॥

चन्द्रमा कलङ्क से युक्त होकर भी निष्कलङ्क श्वेत कान्ति का प्रसार

वा, एकमनेकं शास्त्रविज्ञानं वा।

काव्यनिर्माण-चातुर्यं, कवीनां धर्म उच्यते।
किं तत् काव्य-निर्माणं यत्, देशं जातिं च नोद्धरेत् ॥३४॥

राष्ट्रोन्निनीषया काव्यं, कुर्वन् विज्ञानवर्धनम्।
तृणाय मन्यते राज्यं, कविः सत्याप्तिलिप्सया ॥३५॥ प्राप्तिरित्यधिक

तत्र काव्यस्य काव्यत्वं, यत्र तज्ज्ञाः समासते।
वकारो[1] लुप्यते तत्र, यत्र मूर्खाः समासते ॥३६॥

१. वकारलोपात् काव्यं कायमिति शब्दमात्रमवशिष्यतेऽनर्थकम्।

सत्याग्रहस्याधारान् वक्ति—

नैपुण्यं स्वजने दयां परिजने शाठ्यं शठे चान्वहं,
प्रीतिं साधुजने नयं क्षितिपतौ विद्वज्जने चार्जवम्।
शौर्यं शत्रुजने क्षमां लघुजने नारीजने संयमं,
कुर्वन्तो विचरन्ति ये बुधवरास्तेष्वेव सत्यस्थितिः ॥३७॥

करता है। इसी प्रकार थोड़े अर्थ से युक्त भी साधु के वचन मन को परम निर्मल बना देते हैं ॥३३॥

[कवियों को लक्ष्य करके कवि कहता है कि—] काव्यनिर्माण में प्रवीणता प्रकट करना ही कवियों का धर्म कहा जाता है। उस काव्य के निर्माण से क्या लाभ, जो कि देश और जाति का उद्धार न करे। अर्थात् देश, जाति आदि के उद्धार की ओर प्रवृत्त करने वाला काव्य ही सर्वोत्तम होता है ॥३४॥

राष्ट्र के समुत्थान की अभिलाषा से विज्ञान की वृद्धि करने वाले काव्य का निर्माण करता हुआ कवि सत्य की प्राप्ति के लिये राज्य को भी तृण के समान मानता है ॥३५॥

जिस काव्य से विद्वज्जन अनुराग करते हैं, वह काव्य सुकाव्यता को प्राप्त करता है। और जिस काव्य से मूर्खजन [स्वसम्मत विषय होने से] अनुराग करते हैं, उस काव्य शब्द के मध्य से 'व' का लोप हो जाता है, अर्थात् वह केवल काय-शब्द और प्राणहीन शरीर का ढ़ांचा रह जाता है ॥३६॥

जो विज्ञजन अपने बान्धवों पर आत्मीयता, सेवकों पर दया, धूर्त्तों पर सदा धूर्त्तता, सज्जनों पर प्रीति, राजा पर न्यायनिष्ठा, विद्वज्जनों के समक्ष नम्रता, शत्रुओं पर शूरता, छोटों पर क्षमा, स्त्रियों में संयम का [व्यवहार] करते हुए विचरण करते हैं, उनमें ही सत्य की स्थिति होती है॥३७

परोपकार-संलग्ना, जयन्ति सुधियो जनाः ।
परापकार-निरता, नश्यन्ति कुधियो जनाः ॥३८॥

निश्छलमाचरितं सत्यं सत्यमेतान् गुणान् करोति—

'सत्यं' जाड्यं सुधां मानं, पापं चेतो यशो रतिम् ।
हरेत् सिञ्चेद् दिशेद् हन्याद्, हर्षयेत् तनुयात् क्रियात्[1] । ३९॥

१. यथाक्रमं क्रियया योगस्तद्यथा—सत्यं जाड्यं हरेत्, सत्यं सुधां सिञ्चेदित्यादि । सत्यं शब्दः प्रत्येकमभिसम्बध्यते ।

अथ विशेषकेनाह—

सूनु[1]: प्रियतमा[2] स्वामी[3], मित्रं[4] परिजनो[5] मनः[6] ।
आकारो[7] विभवो[8] वक्त्रं[9], यस्यादेशकरः[1] सती[2] ॥४०॥
सकृपः[3] स्नेहवद्[4] वश्यः[5], क्लेशलेश-विवर्जितम्[6] ।
रुचिरो[7] निभृतश्चैव[8], विद्याभूषितमेव[9] च ॥४१॥
सम्पद्भूच आभ्यः संयुक्तो, नरो नो चेत् परोपकृत् ।
श्वसन्नपि स धिक्कार्यः, पांसुराशेरुपासकः[1] ॥४२॥

१. यथांकक्रमं सम्बन्धस्तद्यथा—सूनुरादेशकरः, प्रियतमा सती, स्वामी सकृप इत्यादि ।

उपर्युक्तासु सम्पत्सु यथालाभसन्तुष्टेन सत्कर्मसु प्रयतनीयमिति द्रढयति—

---

परोपकार में निरत बुद्धिमान् मनुष्य जय को प्राप्त होते हैं । तथा दूसरों का अपकार करने वाले दुर्बुद्धि मनुष्य नष्ट होते हैं ॥३८॥

[सच्ची लग्न से सत्य की आराधना की जाय तो सचमुच ही] यह सत्य मूर्खता को दूर करदे, अमृत का सिञ्चन करदे, मान का दान करदे, पाप का नाश करदे, चित्त को प्रसन्न करदे, यश को विस्तृत करदे, और [सर्व जीवों के प्रति] प्रीति उत्पन्न कर देवे ॥३९॥

आज्ञापालन करनेवाला पुत्र, धर्म-पालिका स्त्री, कृपालु स्वामी, स्नेही मित्र, अनुकूल सेवक, प्रफुल्ल मन, सुन्दर स्वरूप, पूर्ण वैभव और विद्या से शोभित मुख, इन सम्पत्तियों से जो युक्त होता है, वह मानव वस्तुतः मानव है । इसके अतिरिक्त जो नर केवल जन्म लेकर [इन सम्पत्तियों की साधना को छोड़] अन्य तुच्छ धूलिसम पदार्थों की प्राप्ति के लिये लालायित रहता है, वह जीवित होते हुये भी धिक्कार के योग्य है, अर्थात् वह मृतक के समान है ॥४०-४२॥ [यह तीन श्लोकों का विशेषक है]

एकां द्वयीं वाऽऽसु सुलभ्य बह्वी:, कुर्यान्नरो विश्वहिताय कार्यम् ।
सर्वानुकूल्यं लभते नरो नो, श्रीकृष्णपौत्रस्य[1] मतं त्वदोऽस्ति ।।४३।।

१. कर्ताऽस्य काव्यस्य श्रीकृष्णपौत्र: ।

श्रेयश्चिकीर्षुर्गतभीर्दयालु—र्यमान्[1] निषेवेत निरस्तदम्भ: ।
शास्त्राण्यधीयीत तदर्थविद्भ्यस्त्यक्त्वाऽरिवर्गं विचरेदनंह:[2] ।।४४।।

१. अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमा: । २. अनंहो निष्पाप: ।

आर्यपुरुषा दु:खातिशयात् स्वं प्राप्तव्यं न जहति—

नो यान्ति सत्य-निभृते पथि दण्डभीता,
गत्वाऽपि विघ्नविहता: प्रतियन्ति[1] मध्या: ।
दण्डैरनेकविधकै: प्रतिहन्यमाना,
गन्तव्यमार्यपुरुषा न परित्यजन्ति ।।४५।।

१. इण् गतावित्यस्य प्रथमपुरुषबहुवचनरूपम् ।

दुराराध्ये मार्गे प्रेरयितुमनर्हान् कीर्त्तयति –

अशान्त-दुर्दान्त-मनोविकारा, रुजार्त्तदेहा हतसत्यनिष्ठा: ।
ये ते न योज्या नृभिराप्तविद्यै:, सत्याग्रहे सत्यजनैरुपास्ये[1] ।।४६।

एक दो अथवा इन उपर्युक्त सम्पदाओं में से बहुतों को प्राप्त करके मनुष्य विश्वहित के लिये कार्य करे । क्योंकि मनुष्य सब तरह की सुविधायें एक स्थान पर नहीं पा सकता । यह श्रीकृष्णजी वाशिष्ठ के पौत्र=प्रस्तुत काव्यकर्त्ता सत्यदेव वाशिष्ठ का अभिप्राय है ।।४३।।

जो लोक-कल्याण की कामना करने वाला है, वह निडर दयालु और निरभिमान बनकर अहिंसा, सत्य, अस्तेयादि यमों का पालन करे । शास्त्रज्ञ आचार्यों से शास्त्रों का अध्ययन करे,तथा [छहों प्रकार के] अरिवर्ग का त्याग करता हुआ निष्पाप=निर्लिप्त बनकर विचरण करे ।।४४।।

कुछ तो साधारण कोटि के पुरुष राजदण्ड के भय से सत्य=सत्याग्रह के मार्ग का अनुसरण ही नहीं करते । कुछ मध्यम स्थिति के लोग सत्याग्रह करके जेल में जाकर भी विघ्न आ जाने से डर जाते हैं और वापस लौट आते हैं । किन्तु अन्य आर्य पुरुष तो अनेक प्रकार के राजदण्डों से प्रतिहत होकर भी अपने लक्ष्यपथ का परित्याग नहीं करते ।।४५।।

जो अशान्त हों, मनोविकारों के दास हों, रोगी हों, और सत्य के प्रति

१. अर्हार्थेऽत्र 'यत्' ।

कुम्भीधान्यार्हविप्रस्य, लोप्तुं धान्यं तु शक्यते ।
सन्तोषः शक्यते नैव, राज्ञा हर्तुं तपस्विनः ।।४७।।

सन्ति मे विषये[1] सुज्ञा, इति मत्वा च दुर्मतिः ।
पाण्डित्यं लभते नेशो[2], गर्ह्यते सुज्ञ-संसदि ।।४८।।

१. विषये=देशे । २. ईशो राजा, न ईशः=नेशः ।

विद्वान् धान्यार्थहीनो[1]ऽपि, राजते भूभृतोऽधिकम् ।
अर्च्यतेऽवनिपैर्भूयो, विद्या राज्याद् गरीयसी ।४९।।

१. धान्यायार्थो धान्यार्थः,अथवा धान्यं भोज्यवस्तु धान्येनार्थेन हीनाः ।

सद्वित्ता वाऽल्पवित्ता वा, मानं नेच्छन्ति भूपतेः ।
तानर्च बहुशो राजन् ! त्यज स्पर्धां तु तैः सह ।५०।।

पण्डितास्तु प्रसीदन्ति, फलमूलाशनेन वै ।
न जातु क्रेतुकामस्य, प्रियान्नं भुञ्जते द्वि ते ।।५१।।

---

अनुराग वाले न हों, ऐसे व्यक्ति सच्चे कर्मठ-पुरुषों से उपासनीय सत्याग्रह में विद्वानों के द्वारा न भेजे जायें ।।४६।।

कुम्भी-धान्यवाले ब्राह्मण के धान्य का अपहरण किया जा सकता है । किन्तु तपस्वी का सन्तोष राजा के द्वारा अपहृत नहीं किया जा सकता ।।४७।।

मेरे देश (राज्य) में बड़े-बड़े पण्डित हैं, ऐसा समझकर कोई मूर्ख राजा पण्डित नहीं बन जाता, अपितु वह [अपने देश की] पण्डित-सभा में निन्दित ही होता है ।।४८।।

धन-धान्य से हीन होने पर भी विद्वान्, राजा से अधिक आदरणीय होता है, और अनेक राजाओं से वार-वार उसकी पूजा होती है। क्योंकि विद्या राज्य से बड़ी है ।।४९।।

विद्वान् धनी हों अथवा निर्धन हों, पर वे राजा से सम्मान नहीं चाहते हैं । अतः हे राजन् ! उनके साथ स्पर्धा न करो, और उनका सम्मान करो ।।५०।।

पण्डितजन केवल कन्द [मूल] व फल आदि खाकर ही प्रसन्न हो जाते हैं। परन्तु उन्हें यदि कोई मिष्टान्नादि खिला-पिला कर खरीदना चाहता है, वा दास बनाना चाहता है, तो वे उसे कभी नहीं खाते हैं ।।५१।।

दत्त्वा तृणानि शक्यन्ते, दोग्धुं गावोऽल्पयत्नतः ।
आदृत्य [1]पण्डितास्तद्वत्, प्रष्टुं शक्या न यत्नतः ॥५२॥

१. स्वाधिकृतशास्त्रे कृतप्रयत्नास्तद्रहस्यज्ञा बुद्धिरुत्पन्ना येषां ते पण्डिताः ।

## प्रथमाध्यायस्य 'क्षुत्क्षामीयात्मकः' तृतीयः पादः

तत्र तावदस्य पादस्य लेखनप्रयोजनं द्वाभ्यां पद्याभ्यामाह—

पापठ्यमानो मनुजोऽत्र धैर्य्यं, प्राप्नोतु सत्याग्रह-कर्मयुक्तः ।
सूच्चैस्तरामात्म-चरित्रयोगाद् गन्तव्यमाप्तुं विषहेत सर्वम् ॥१॥

कारासु यद् ध्यानपथं यदाप्तम्, विभज्य निद्रां लिखितं तदैव ।
प्रत्यक्षतः सङ्ग्रथितं भवेद्यत्, तत् सारवत् सञ्चरतीह नान्यत्॥२

राष्ट्राणि सम्बोधयति—

यावन्ति राष्ट्राणि भुवि स्थितानि, काव्यं पथो दर्शकमस्तु तेभ्यः ।
सत्यं न लोके व्ययते कदाचिद, राष्ट्राण्यतोऽदः परमाद्रियन्ताम् ॥३॥ भूवादि गणे पठितः।

गौएं घास देकर सरलता से दुही जा सकती हैं, वैसे ही पण्डितों से भी सम्मानपूर्वक यथेच्छ प्रश्नोत्तर किये जा सकते हैं, न कि अभिमान से वश में करके ॥५२॥

इस सत्याग्रह काव्य के वार-वार पठन से मनुष्य सत्याग्रह के कर्म में तत्पर होकर शान्ति को प्राप्त करे, तथा अत्युत्तम चरित्र के वल से गन्तव्य लक्ष्य की प्राप्ति में आये हुये सब विघ्नों को सहन करे ॥१॥

जो कारागार में घटना घटी उसको, तभी बड़ी कठिनाई से निद्रा को त्याग कर, जैसा का तैसा इस काव्य में लिखा है । जो आंखों देखा और अपने पर बीता हुआ लिखा जाता है, वह चिरकाल तक स्थायी होता है । अन्य कपोल-कल्पित नहीं [क्योंकि वह तत्त्वहीन होता है] ॥२॥

पृथिवी पर जितने भी राष्ट्र हैं,उनके लिए यह काव्य मार्गदर्शक बने । क्योंकि ससार में सत्य कभी क्षय नहीं होता । इसलिये सभी राष्ट्र इस काव्य का पूर्ण आदर करें ॥३॥

